सिनि तुपोवनैकदेशे वेत्रासने सुखोपविष्टम् अनतिदूरवर्त्तिना जालपादनाम्ना शिष्येण दर्भपवित्र-धवित्र-पाणिना मन्दमन्दम् उपवीज्यमानं पितरमवोचत् 'तात ! सकलेयमाश्चर्य्यश्रवण-कुतूहलाकलित-हृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते व्यपनीत-श्रमश्च कुतोऽयं पतत्रिपोतः, तदावेद्यतां किमनेन कृतमन्यस्मिन् जन्मनि को वायमभूद्भविष्यति वे'ति। एवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सर्वानेकाग्रान् श्रवण-तत्परान् मुनीन् बुद्ध्वा शनैः शनैरब्रवीत्—'श्रूयतां यदि कुतूहलम्'।'

इति महाकविबाणभट्टविरचितायां कादम्बर्यां कथामुखविवरणम्।

---

प्रकाशिते, तपोवनैकदेशे मुनिस्थानान्यतरप्रदेशे वेत्रासने वेतसरचितविष्टरे सुखोपविष्टं सुखपूर्वकमासीनम्, अनतिदूरवर्त्तिना नातिनिकटस्थायिना, दर्भवत् कुशवत् पवित्रं पूतम्, धवित्रं मृगचर्मरचितं व्यजनं पाणौ हस्ते यस्य तेन तादृशेन, 'जालपाद' इति नाम यस्य तेन तथोक्तेन शिष्येण छात्रेण मन्दमन्दम् शनैः शनैः उपवीज्यमानम् आन्दोल्यमानं ( पितरम् अवोचत् )।

तातेति। हे तात पितः ! सकला समस्ता इयं प्रत्यक्षरूपेण दृश्यमाना, आश्चर्यस्य अद्भुतपदार्थस्य यच्छ्रवणकुतूहलं यदाकर्णनचित्तवृत्तिविशेषः तेन आकलितं व्याप्तं हृदयं मानसं यस्याः सा तादृशी, तथा आबद्धं विहितं मण्डलं वर्तुलरूपपङ्क्तिभावेनावस्थानं यया सा तथोक्ता, समुपस्थिता समागता तापसपरिषत् मुनिसभा प्रतीक्षते भवद्वचनारम्भमाकांक्षते भवद्विलम्बेनैव विलम्ब इत्याशयः, अयञ्च पतत्रिपोतः शुकशावकः, व्यपनीतः भोजनानुष्ठापनादिना दूरीकृतः श्रमः खेदो यस्य स तादृशः कुतो विहितः। यदनेन शुकशावकेन कृतम् अनुष्ठितं तदावेद्यतां निवेद्यतां 'अस्माकं' इति शेषः। अन्यस्मिञ्जन्मनि एतज्जन्मापेक्षयापरस्मिन् भवे अयं कः अभूत् आसीत्, 'अग्रे च को भविष्यति ?'। एवम् इत्थम् उक्तोऽभिहितस्तु महामुनिः जाबालिः अग्रतः पुरतः स्थितम् आसीनं मां वैशम्पायनम् अवलोक्य दृष्ट्वा एकाग्रान् एकतानान् सर्वान् निखिलान् श्रवणपरान् आकर्णनतत्परान् तान् मुनीन् ऋषीन् बुद्ध्वा अवगम्य च शनैः शनैः अतिवृद्धत्वात् कृशत्वाच्च मन्दं मन्दम् अब्रवीत् अगादीत्—'यदि चेत् कौतूहलम् आश्चर्यं तर्हि श्रूयतां निशम्यताम्।'

इति श्रीकृष्णमोहनशास्त्रिविरचितायां 'चन्द्रकला'नामिकायां टीकायां कथामुखविवरणम्।

---

पिता चन्द्रिकासे चमकते तपोवनके एकभागमें बेंतके आसन पर बैठे थे। थोड़ी दूरमें खड़ा जालपाद नामका एक शिष्य दर्भका पवित्र पंखा हाथमें लेकर धीरे धीरे उनको वायु सञ्चालन कर रहा था। ऐसी दशामें हारीत उनसे कहने लगे—'पिताजी ! समस्त मुनियोंका हृदय आश्चर्यजनक वृत्तान्त सुननेके कुतूहलसे व्याकुल है और आपके पास मण्डल बाँधकर कथारम्भकी प्रतीक्षा कर रहे हैं। इधर इस तोतेके बच्चेकी थकावट भी अब जाती रही है, इसलिए आप कहिये कि इसने पहले जन्ममें क्या किया था ? यह कौन था और अब जन्मान्तरमें क्या होगा ?' हारीत जब इस प्रकार बोल चुके तब मुझे आगे खड़ा देखकर और सब तपस्वियोंको एकाग्र चित्तसे सुननेमें तत्पर हुआ जान वे धीरे धीरे बोले—'यदि आपलोगोंको कौतूहल उत्पन्न हुआ है तो सुनिये ?'

इस प्रकार पं० श्रीकृष्णमोहनशास्त्रि-विरचित 'विद्योतिनी' नामक अनुवादमें कथामुख समाप्त हुआ।

---

१ वेत्रासनोपविष्टम्। २ ...तिदूरवर्त्तिना...। ३ क्वचित् 'धवित्र' इति पदं नास्ति। ४ मन्दम्। ...च। ६ हे तात !। ७ ...आकुलितहृदया। ८ प्रतीक्ष्यते। ९ यदनेन कृतमपरस्मिन् जन्मनि ...भूद्भविष्यति चेति। १० इत्येवमुक्तस्तु। ११ अग्रस्थितम्। १२ क्वचित् 'तत' इति पदं नास्ति। ...तूहलम्।

